सर्वतस्तत्समीचीं वृष्टिं दधाति तस्मात्सर्वतः सम्यक् भूत्वा सर्वाभ्यो दिग्भ्यो वर्षति वायव्या अनूपदधाति वायौ तद्वृष्टिं दधाति तस्माद्यां दिशं वायुरेति तां दिशं वृष्टिरन्वेति।।३।।

यद्वेवापस्या उपदधात्येष्वेवैतत्प्राणेष्वपो दधाति ता अनन्तर्हिताः प्राणभृद्भ्य उपदधात्यनन्तर्हितास्तत्प्राणेभ्योऽपो दधात्यथो अन्नं वा आपोऽनन्तर्हितं तत्प्राणेभ्योऽन्नं दधात्यपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृष्टिमेरयेत्येता एवैष्वेतत्क्लृप्ता आपो[1] दधाति ।।४।।

अथ छन्दस्या उपदधात्येतद्वै देवा अब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमानाः पशूनेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति छन्दस्या उपदधाति पशवो वै छन्दांसि पशूनेवास्मिन्नेतद्दधाति सर्वत उपदधाति सर्वतस्तत्पशून् दधाति तस्मात्सर्वतः पशवोऽपस्या अनूपदधात्यप्सु तत्पशून्प्रतिष्ठापयति तस्माद्यदा वर्षत्यथ पशवः प्रतितिष्ठन्ति ।।५।।

यद्वेव छन्दस्या उपदधाति प्रजापतेर्विस्रस्तात्पशव उदक्रामंश्छन्दांसि भूत्वा तान् गायत्री छन्दो भूत्वा वयसाप्नोत्तद्यद्गायत्र्याप्नोदेतद्धि छन्द आशिष्ठं सा तद्भूत्वा प्रजापतिरेतान् पशून्वयसाप्नोत् ।।६।।

मूर्धा वय इति प्रजापतिर्वै मूर्धा स वयोऽभवत्प्रजापतिश्छन्द इति प्रजापतिरेव छन्दोऽभवत् ।।७।।

क्षत्रं वय इति प्रजापतिर्वै क्षत्रं स वयोऽभवन्मयन्दं छन्द इति यद्वा अनिरुक्तं तन्मयन्दमनिरुक्तो वै प्रजापतिः प्रजापतिरेव छन्दोऽभवत् ।।८।।

१. अपो MD

and thereby brings rain to both these worlds. That is why, we have rains. He places them all around and thus makes it rain all around. He places them all over in the same direction and thereby causes the rain to fall in the same direction. In the process, when the rain falls, it falls everywhere, from all quarters in the same direction. He places them alongside the *vāyavyā* bricks and thus bestows rain on the wind. That is why, the rains follow that direction towards which the wind blows.

**4.** As to why he places the *apasyā* bricks is because he puts water into the *prāṇas.* He places them in such a way that they are not separated from the *prāṇabhṛts* and thereby places the water close to the vital airs. Waters are really the same as food and in this process, he provides food for the *prāṇas.* And while laying (he says), "Make the waters rise up and quicken the growth of plants; protect the bipeds and also the four-footed, draw rains from the sky." This is how, he places the well-defined waters into it.

**5.** Then he places *chandasyā* bricks. The gods once said, "Meditate", which only meant 'discover the layer'. While meditating, they saw the cattle itself as a layer and placed it into this *Agni*-altar. In the same way, this one (Yajamāna) places it thereon. By placing the *chandasyā* bricks, the metres being cattle, he actually places the cattle. By placing them all around, he distributes the cattle all around. He places them alongside the *apasyās* and thereby establishes those cattle on the water. That is how, the cattle prosper when it rains.

**6.** And again, why he places the *chandasyā* (is)– from the body of Prajāpati who was exhausted; the cattle came out assuming the form of metres. Gāyatrī becoming a metre, by her vigour, overtook them and that is why this metre Gāyatrī is the shortest. Thereafter Prajāpati in the form of Gāyatrī, managed to overcome all the cattle by his vigour.

**7.** Vigour is represented by the head and Prajāpati is the head. He became vigour and assumed the form of Gāyatrī metre. In other words, Prajāpati himself transformed into a metre.

**8.** Kṣatra (martial prowess) is vigour and Prajāpati represents martial vigour. He became the vigour with a metre that gives pleasure. This metre is undefined, and is pleasure giving. Prajāpati is also undefined, and he himself became the metre.

विष्टंभो वय इति प्रजापतिर्वै विष्टंभः स वयोऽभवदधिपतिश्छन्द इति प्रजापतिर्वा अधिपतिः प्रजापतिरेव छन्दोऽभवत् ।।९।।

विश्वकर्मा वय इति प्रजापतिर्वै विश्वकर्मा स वयोऽभवत्परमेष्ठी छन्द इत्यापो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति प्रजापतिरेव परमेष्ठी छन्दोऽभवत्।।१०।।

तानि वा एतानि चत्वारि वयाꣳसि चत्वारि छन्दाꣳसि तदष्टावष्टाक्षरा गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान् पशून्वयसाप्नोत्तस्माज्जीर्णं पशुं वयसाप्त इत्याचक्षते तस्मादु सर्वास्वेव वयो वय इत्यनुवर्ततेऽथ येऽस्मात्ते पशव उदक्रामन्नेते ते पञ्चदशोत्तरे वज्रो वै पशवो वज्रः पञ्चदशस्तस्याद्यस्य[२] पशवो भवन्त्यपैव स पाप्मानꣳ हते वज्रो हैव तस्य पाप्मानमपहन्ति तस्माद्यां काञ्च दिशं पशुमानेति वज्रविहताꣳ हैव तामन्वेति ।।११।। इति तृतीयं ब्राह्मणम् ।।

## चतुर्थं ब्राह्मणम्

बस्तो वय इति बस्तं वयसाप्नोद्विवलं छन्द इत्येकपदा वै विवलं छन्द एकपदा ह भूत्वाजा उच्चक्रमुः ।।१।।

वृष्णिर्वय इति वृष्णिं च वयसाप्नोद्विशालं छन्द इति द्विपदा वै विशालं छन्दो द्विपदा ह भूत्वा वय उच्चक्रमुः ।।२।।

पुरुषो वय इति पुरुषं वयसाप्नोत्तन्द्रं छन्द इति पङ्क्तिर्वै तन्द्रं छन्दः पङ्क्तिर्ह भूत्वा पुरुषा उच्चक्रमुः ।।३।।

व्याघ्रो वय इति व्याघ्रं वयसाऽऽप्नोदनाधृष्टं छन्द इति विराड्वा अनाधृष्टं छन्दोऽन्नं वै विराळन्नमनाधृष्टं विराड्ढ भूत्वा व्याघ्रा उच्चक्रमुः ।।४।।

२. तमाद्यस्य in TE and Mss

**9.** Support is vigour and Prajāpati is the support. He became vigour and transformed into overlord metre. The overlord metre is doubtless Prajāpati and Prajāpati himself is the metre.

**10.** The all-maker(Viśvakarman) is vigour and Prajāpati is the maker of all. He became vigour and assumed the form of Parameṣṭhī metre. Waters are in Prajāpati, the Parameṣṭhī, because they are situated in the *parama-sthāna*(highest place). Therefore, Prajāpati himself became the Parameṣṭhī metre.

**11.** Thus there are four kinds of vigour and four metres, making up a total of eight. Gāyatrī has eight syllables and certainly the same Gāyatrī is in the form of Prajāpati, who by his vigour, overtook those cattle. They say that he overtook by his vigour the insipid cattle and that is why at each time (while referring to Prajāpati assuming the form of a metre) the word '*vaya*' (vigour) is repeated. Those cattle which went away from him (Prajāpati) are these fifteen *Vyāhṛtis*. Cattle are indeed the thunderbolt and thunderbolt is fifteenfold. Therefore, he who possesses cattle, drives away all the enemy. Truly it is thunderbolt that destroys the enemy. In whatever direction the one who possesses cattle moves, that direction is cleared for him by the thunderbolt. (Third Brāhmaṇa Ends.)

**BRĀHMAṆA IV**

**1.** "The he-goat represents vigour." He overtook by his vigour the he-goat. Vivala is a metre (literally meaning that which has no gap). Vivala is indeed the one-footed (*ekapadā*). It is in the form of the Ekapadā metre, the goats escaped from the body of Prajāpati.

**2.** "The ram is vigour." The ram he overtook by his vigour. Viśāla is a metre and Viśāla is two-footed. In the form of the *dvipadā*, the ram escaped from his body.

**3.** "Man is vigour." He overtook man by his vigour. Tandra is metre (literally meaning inertia). The Tandra metre is the Paṅkti. Men escaped from his body in the form of Paṅkti.

**4.** "The tiger is vigour." He overtook tiger by his vigour. '*Anādhṛṣṭa* is the metre' (meaning unchallengeable). *Anādhṛṣṭa* is indeed the Virāj. For Virāj is food. The food having become unchallengeable, Virāj escaped as tiger from his body.

सिꣳहो वय इति सिꣳहं वयसाऽऽप्रोच्छदिश्छन्द इत्यतिच्छन्दा वै छदिश्छन्दः सा हि सर्वाणि छन्दाꣳसि च्छादयत्यतिच्छन्दा ह भूत्वा सिꣳहा उच्चक्रमुरथातो निरुक्तानेव पशून्निरुक्तानि च्छन्दाꣳस्युपदधाति ।।५।।

पष्ठवाड्वय इति पष्ठवाहं वयसाऽऽप्रोद्बृहती छन्द इति बृहती ह भूत्वा पष्ठवाह उच्चक्रमुः॥६॥

उक्षावय इत्युक्षाणं वयसाऽऽप्रोत्ककुप्छन्द इति ककुब्भ भूत्वोक्षाण उच्चक्रमुः ।।७।।

ऋषभो वय इत्यृषभं वयसाऽऽप्रोत्सतो बृहती छन्द इति सतो बृहती ह भूत्वर्षभा उच्चक्रमुः ।।८।।

अनड्वान्वय इत्यनड्वाहं वयसाऽऽप्रोत्पङ्क्तिश्छन्द इति पङ्क्तिर्ह भूत्वाऽनड्वाह उच्चक्रमुः ।।९।।

धेनुर्वय इति धेनुं वयसाऽऽप्रोज्जगती छन्द इति जगती ह भूत्वा धेनव उच्चक्रमुः ।।१०।।

त्र्यविर्वय इति त्र्यविं वयसाऽऽप्रोत्त्रिष्टुप्छन्द इति त्रिष्टुब्भ भूत्वा त्र्यवय उच्चक्रमुः ।।११।।

दित्यवाड्वय इति दित्यवाहं वयसाऽऽप्रोद्विराट्छन्द इति विराड्ढ भूत्वा दिव्यवाह उच्चक्रमुः ।।१२।।

पञ्चाविर्वय इति पञ्चाविं वयसाऽऽप्रोद्गायत्री छन्द इति गायत्री ह भूत्वा पञ्चावय उच्चक्रमुः ।।१३।।

त्रिवत्सो वय इति त्रिवत्सं वयसाऽऽप्रोदुष्णिक्छन्द इत्युष्णिग्घ भूत्वा त्रिवत्सा उच्चक्रमुः ।।१४।।

**5.** "The lion is vigour." The lion he overtook by his vigour. 'Chadi is the metre' (meaning to cover). Because it covers all over himself and assumes the form of *Aticchandā* (super metre) and escaped as lions (from his body). Thus he places the undefined metres alongwith defined beasts.

**6.** "The ox is vigour." The ox he overtook by his vigour. 'The Bṛhatī is the metre' and having assumed the form of Bṛhatī, the oxen escaped from him.

**7.** "The bull is vigour." He overtook the bull by his vigour. 'The Kakubh is the metre.' In the form of Kakubh, the bulls went forth from him.

**8.** "The stud-bull is vigour." He overtook the stud-bull by his vigour. 'The Sato bṛhatī is the metre.' In the form of Sato bṛhatī, the stud-bulls escaped from his body.

**9.** "The bullock is vigour." He overtook bullock by his vigour. 'Paṅkti is the metre.' In the form of Paṅkti the bullocks escaped from him.

**10.** "The cow with calf is vigour." He overtook the cow with calf by his vigour. 'The Jagatī is the metre' and assuming the form of Jagatī, cows (with calves) escaped from him.

**11.** "The *tryavī* (the 18 months old calf) is vigour." He overtook *tryavī* by his vigour. 'The Triṣṭubh is the metre.' Assuming the form of Triṣṭubh, the *tryavī* escaped from him.

**12.** "The two year old bull (*dityavāḍ*) is vigour." He overtook *dityavāḍ* by his vigour. 'The Virāḍ is the metre.' Assuming the form of Virāḍ, the bulls (*dityavāḍs*) escaped from him.

**13.** The two and a half year old bull (*pañcāvi*) is vigour." He over-took *pañcāvi* by his vigour. 'Gāyatrī, is the metre.' Assuming the form of Gāyatrī, the *pañcāvi* escaped from his body.

**14.** "The *trivatsā* (three year old bull) is vigour." He overtook *trivatsā* by his vigour. 'Uṣṇik is the metre.' Assuming the form of Uṣṇik, the three year old bulls went away from him.

तुर्यवाड्वय इति तुर्यवाहं वयसाऽऽप्रोदनुष्टुप्छन्द इत्यनुष्टुब्भ भूत्वा तुर्यवाह उच्चक्रमुः ।।१५।।

एते वै ते पशवो याꣳस्तत्प्रजापतिर्वयसाऽऽप्रोत्स वै पशुं प्रथममाहाथ वयोऽथ छन्दो वयसा च ह्येनाꣳश्छन्दसा च परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनानयमेतद्वयसा चैव छन्दसा च परिगत्यात्मन्धत्त आत्मन्कुरुते ।।१६।।

स एष पशुर्यदग्निस्सोऽत्रैव सर्वः कृत्स्नः सꣳस्कृतस्तस्य याः पुरस्तादुपदधाति शिरोऽस्य ता अथ या दक्षिणतश्चोत्तरतश्च स आत्माथ याः पश्चात्तत्पुच्छꣳ स वै पुरस्तादेवाग्र उपदधाति शिरो हि प्रथमं जायमानस्य जायतेऽथ दक्षिणत उपधायोत्तरत उपदधाति सार्धमयमात्मा जायता इत्यथ पश्चात्पुच्छꣳ ह्यन्ततो जायमानस्य जायते तद्यानि वर्षिष्ठानि छन्दाꣳसि ये स्थविष्ठाः पशवस्तान्मध्यं उपदधाति मध्यं तत्प्रति पशुं वरिष्ठं करोति तस्मान्मध्यं प्रतिपशुर्वरिष्ठोऽथ ये वीर्यवत्तमाः पशवस्तान्दक्षिणत उपदधाति दक्षिणं तदर्धं पशोर्वीर्यवत्तरं करोति तस्माद्दक्षिणोऽर्धः पशोर्वीर्यवत्तरः ।।१७।।

पूर्वार्धं च जघनार्धं चाणिष्ठौ करोति यदहामूश्श्रुतस्त्रस्ते नैता अणिष्ठा अथ यदिह ह्रसिष्ठान्पशूनुपदधाति तेनो एता अणिष्ठाः पूर्वार्धं च तज्जघनार्धं च पशोरनिष्ठौ करोति तस्मात्पूर्वार्धश्च जघनार्धश्च पशोरणिष्ठौ तस्मात्पूर्वार्धेन च जघनार्धेन च पशुरुच्च तिष्ठति सं च विशत्यथ लोकंपृणे उपदधात्यस्याꣳ स्त्रक्त्यां तयोरुपरि बन्धुः पुरीषं निवपति तस्योपरि बन्धुः ।।१८।। इति चतुर्थं ब्राह्मणम् ।।

**।। इति द्वितीयोऽध्यायः ।।**

**15.** "The *turyavāḍ* ( four year old bull) is vigour." He overtook the *turyavāḍ* by his vigour. 'Anuṣṭubh is the metre.' In the form of Anuṣṭubh, the four year old bulls came out of him.

**16.** These then are the cattle which Prajāpati overtook by his vigour. Therefore, the priest first mentions the animal, then the vigour and then the metre. Thus he sews him on both sides with the vigour and metre and puts them into himself and makes them his own. In the same way, this one (Yajamāna) knits them with vigour and metre, and puts them into himself and makes them his ownself.

**17.** That which is the animal is same as *Agni*-altar. Even now he (Agni) is fashioned completely in all respects. Those bricks he places in the front are his head. Those from the right and the left sides are his body and those in the back form his tail. He first lays down the bricks in the front because when an animal is born it is the head that comes out first. Next he places the bricks on the right side (southern side) and then at the left, so that these body parts (of the altar) shall be born together. Then he places the tail at the back, because the tail is the last one to come out when an animal is born. The metres which are longest and the animals which are biggest are placed in the middle and thereby he makes this animal (altar) sturdier in the middle. The animals which are strongest, he places on the right side and thus the right side of the animal becomes stronger. That is why (generally) the animals are stronger on their right side.

**18.** The front half and the back half he makes smallest. Insofar as those bricks (in front) are only four in number, thereby they are smallest and inasmuch as here (back) he puts the smallest animal, the forefront and the hind parts of the animal are both smallest. That is why the face and the anus of animals are pointed and that is also why animals get up or lie down by their front and by their back. Then he places the *lokaṁpṛṇā* bricks in that corner. The significance of this will be explained later. Over them, he scatters loose soil and the purport of this will also be explained later. (Fourth Brāhmaṇa Ends.)

**(Second Chapter Ends.)**

# तृतीयोऽध्यायः

## प्रथमं ब्राह्मणम्

तृतीयां चितिमुपदधात्येतद्वै देवा द्वितीयां चितिं चित्वा समारोहन्यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षादेव तत्सꣳस्कृत्य समारोहन् ।।१ ।।

तेऽब्रुवꣳश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्नित ऊर्ध्वमिछतेति ते चेतयमाना अन्तरिक्षमेव बृहतीं तृतीयां चितिमपश्यꣳस्तेभ्य एष लोकोऽछन्दयत् ।।२ ।।

त इन्द्राग्नी अब्रुवन्युवं न इमां तृतीयां चितिमुपधामिति किं नौ ततो भविष्यतीति युवमेव नः श्रेष्ठौ भविष्यथ इति तथेति तेभ्य एतामिन्द्राग्नी तृतीयां चितिमुपाधत्तां तस्मादाहुरिन्द्राग्नी एव देवानाꣳ श्रेष्ठाविति ।।३ ।।

स वा इन्द्राग्निभ्यामुपदधाति विश्वकर्मणा सादयतीन्द्राग्नी च वै विश्वकर्मा चैतां तृतीयां चितिमपश्यꣳस्तस्मादिन्द्राग्निभ्यामुपदधाति विश्वकर्मणा सादयति ।।४ ।।

यद्वेवेन्द्राग्निभ्यामुपदधाति विश्वकर्मणा सादयति प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामꣳस्तस्येन्द्राग्नी च विश्वकर्मा च मध्यमादायोत्क्रम्यातिष्ठꣳस्तानब्रवीदुपमेतत्प्रति म एतद्धत्त येन मे यूयमुदक्रमिष्टेति किं नस्ततो भविष्यतीति युष्मद्देवत्यमेव म एतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतदिन्द्राग्नी च विश्वकर्मा च प्रत्यदधुस्तद्यैषा मध्यमा स्वयमातृण्णैतदस्य तदात्मनस्तद्यदेतामत्रोपदधाति यदेवास्यैषात्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति ।।५ ।।

## Chapter Three

### BRĀHMAṆA I

**1.** He builds up the third layer. This is the layer which gods ascended after building the second one and it is above the earth and below the aerial region. That is what they fashioned and ascended.

**2.** They said (to themselves), "Contemplate", by which they meant 'plan a layer upwards from here.' By contemplating, they discovered the aerial region itself as the large third layer. That world did please them.

**3.** They said to Indra and Agni "You both lay down this layer for us". They asked, "What benefit will it cause to us?" (Gods said) "You two shall be the foremost among us." "Be it so," (they agreed). Those two, Indra and Agni laid down that third layer for them and that is why, Indra and Agni are the foremost among gods.

**4.** He (Yajamāna) similarly lays it down with the help of Indra and Agni and settles it with (the help of) Viśvakarmā. Because this third layer was discovered by Indra, Agni and Viśvakarmā, he lays it down with the help of Indra and Agni and settles it with the help of Viśvakarmā.

**5.** And again why he lays it down by means of Indra and Agni and settles it by means of Viśvakarmā is this — when Prajāpati got exhausted, the gods took him (in parts) and dispersed in different directions. Indra, Agni and Viśvakarmā, collected his middle part and kept going away. He (Prajāpati) told them — "Come to me and return to me that (part of mine) with which you are going away." They asked, "What will accrue to us by that?" "That (part of) my body shall have you as its presiding deities." They said, "Yes" and restored that part unto him. So this middle part of the body is the naturally perforated brick in the centre. When he now lays down that (*svayamātṛṇṇā*) brick, he (the Yajamāna) is restoring that part of the body of his. That is why he now lays down that (brick).

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवमिति यथैव यजुस्तथा बन्धुः पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधस इति पृष्ठेन ह्येषा द्यावापृथिवी अन्तरिक्षं च विबाधते ॥६॥

विश्वकर्मा त्वा सादयत्विति विश्वकर्मा ह्येतां तृतीयां चितिमपश्यदन्तरिक्षस्य च पृष्ठे व्यचस्वतीं प्रथस्वतीमित्यन्तरिक्षस्य ह्येतत्पृष्ठं व्यचस्वत्प्रथस्वदन्तरिक्षं येछान्तरिक्षं[1] दृꣳहान्तरिक्षं मा हिꣳसीरित्यात्मानं यच्छात्मानं यच्छान्तरिक्षं दृꣳहात्मानं मा हिꣳसीरित्येतद्विश्वस्मै प्राणायापानाय व्यानायोदानायेति प्राणो वै स्वयमातृण्णा सर्वस्मा उ वा एतस्मै प्राणः प्रतिष्ठायै चरित्रायेतीमे वै लोका : स्वयमातृण्णा इम उ लोका : प्रतिष्ठा चरित्रं वायुष्ट्वाभिपात्विति वायुष्ट्वाभिगोपायत्वित्येतन्मह्या स्वस्त्येति महत्या स्वस्त्येत्येतच्छर्दिषा शन्तमेनेति यच्छर्दिः शन्तमं तेनेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुरथ साम गायति तस्योपरि बन्धुः ॥७॥

अथ दिश्या उपदधाति दिशो वै दिश्या दिश एवैतदुपदधाति तद्याभिरदो वायुर्दिग्भिरनन्तर्हिताभिरुपैता एतास्ता एवैतदुपदधाति ता उ एवामूः पुरस्ताद्दर्भस्तबं च लोगेष्टकाश्चोपदधात्यसौ वा आदित्य एता अमुं तदादित्यं दिक्ष्वध्यूहति दिक्षु चिनोति ता यत्तत्रैव स्युर्बहिर्धा तत्स्युर्बहिर्धो वा एतद्योनेरग्निकर्म यत्पुरा पुष्करपर्णात्ता यदिहाहृत्योपदधाति तदेना योनौ पुष्करपर्णे प्रतिष्ठापयति तथो हैता अबहिर्धा भवन्ति ता अनन्तर्हिताः स्वयमातृण्णा या उपदधात्यन्तरिक्षं वै मध्यमास्वयमातृण्णानन्तर्हितास्तदन्तरिक्षा-

१. यच्छान्तरिक्षं missing in TE

**6.** "O Indra and Agni ! You make that brick firm so that it does not tilt" — as the text, so the meaning. "You pressurise the earth, the sky and the aerial region with your back" — because this *svayamātṛṇṇā* brick indeed, pressurises the earth, the sky and the aerial region.

**7.** "May Viśvakarmā settle you" — because it is indeed Vîśvakarmā who discovered this layer. "You the large and big on the back of the aerial region" — for, this (brick) is indeed the large and big back of the aerial region. "You support this aerial region, make it firm and do not injure the aerial region." "For all the *prāṇa, apāna, vyāna* and *udāna*" — for, the *svayamātṛṇṇā* is indeed *prāṇa* (vital air) and the vital air is for everything here — for settling and for moving. The naturally perforated brick is these worlds and these worlds are indeed, the settling place and the moving space. "May Vāyu protect you" that is, let Vāyu safeguard you. "With great prosperity" meaning 'with great well-being'. "With most peaceful protection" meaning 'with such protection which is most peaceful.' Having settled it he chants the *Sūdadohasa* upon it. Its significance has been told. Then he sings a *Sāman*, the purport of it will be explained later.

**8.** He then places the *diśyā* bricks (regional bricks). Regional bricks are the regions themselves and so he places only regions. These are those same regions not separated (form the aerial region) where they stepped in then, along with Vāyu. It is them he now places. Before this, he places the brick of grass-bundle (*darbhastamba* brick) and the unbaked brick (*logeṣṭakā*). These *diśyā* bricks are the yonder sun and thus he places the yonder sun over the quarters and builds him up in the regions. If he were to place the *diśyā* simultaneoulsy as the *darbhastamba* bricks and the *logeṣṭakās*, they will be outside (the altar) and that means outside the womb. Only what sacrificial act is done before the laying of the lotus-leaf, falls outside the womb. Since he brings and lays these bricks (*diśyā*) now, he establishes them in the womb, the lotus-leaf. That is how they do not become excluded. They are not separated from the *svayamātṛṇṇā*. The central naturally perforated brick is the aerial region. So he lays the quarters in close proximity to the aerial region. Just facing the *svayamātṛṇṇā*, he lays them, so that the quarters are placed facing the aerial region,within

द्विशो दधात्युत्तरा उत्तरास्तदन्तरिक्षाद्दिशो दधाति रेतस्सिचोर्वेलयेमे वै रेतस्सिचावनयोस्तद्दिशो दधाति तस्मादनयोर्दिशः सर्वत उपदधाति सर्वतस्तद्दिशो दधाति तस्मात्सर्वतो दिशः सर्वतः समीचीः सर्वतस्तत्समीचीर्दिशो दधाति तस्मात्सर्वतः समीच्यो दिशः ।।८।।

यद्वेव दिश्या उपदधाति छन्दाꣳसि वै दिशो गायत्री वै प्राची दिक्त्रिष्टुब् दक्षिणा जगती प्रतीच्यनुष्टुबुदीची पङ्क्तिरूर्ध्वा पशवो वै छन्दाꣳस्यन्तरिक्षं मध्यमा चितिरन्तरिक्षे तत्पशून् दधाति तस्मादन्तरिक्षायतनाः पशवः ।।९।।

यद्वेव दिश्या उपदधाति छन्दाꣳसि वै दिशोः पशवो वै छन्दाꣳस्यन्नं पशवो मध्यं मध्यमा चितिर्मध्यतस्तदन्नं दधाति ता अनन्तर्हिताः स्वयमातृण्णाया उपदधाति प्राणो वै स्वयमातृण्णानन्तर्हितं तत्प्राणादन्नं दधात्युत्तरा उत्तरं तत्प्राणादन्नं दधाति रेतस्सिचोर्वेलया पृष्टयो वै रेतस्सिचौ मध्यमु पृष्टयो मध्यत एवास्मिन्नेतदन्नं दधाति सर्वत उपदधाति सर्वत एवास्मिन्नेतदन्नं दधाति ।।१०।।

राज्ञ्यसि प्राची दिग्विरालसि दक्षिणा दिक्सम्रालसि प्रतीची दिक्स्वरालस्युदीची दिगधिपत्न्यसि बृहती दिगिति नामान्यासामेतानि नामग्राहमेवैना एतदुपदधाति ता नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति ता नाना हि दिशः ।।११।। इति प्रथमं ब्राह्मणम्।।

the boundaries of the two *retassica* bricks. These two worlds are the *retassica* bricks. These two worlds are the *retassicas.* In them he lays down the quarters. He places them (*diśyās*) on all sides, by which he places the *diśyās* (quarters) on all sides. That is why the quarters are on all sides. He places them straight and by that he places the quarters so as to face each other. That is why the quarters are facing each other.

**9.** Now why he lays down the *diśyā* bricks ? The quarters are the metres. The eastern direction is the Gāyatrī metre; the south is Triṣṭubh; the west is the Jagatī; the north is the Anuṣṭubh and the upper region is the Paṅkti. The metres are *paśus* and the middle layer is the aerial region. Thus he places the *paśus* (cattle) in the aerial region. Hence there are cattle with their abode in the aerial region.

**10.** Now again why he places the *diśyā* bricks ? The directions are the metres and metres are these cattle. The cattle are food. The middle layer is in the middle (of the body). He thus supplies food in the middle and they are placed so as they are not separated from the naturally perforated brick. The *svayamātṛṇṇā* is indeed, *prāṇa.* So he places food not separated from the *prāṇa.* He lays them close to each other (on the *svayamātṛṇṇā*); the food and the *prāṇa.* He places them within the boundaries of the *retassics*, for, the *retassics* are ribs and the ribs are in the middle. So he supplies food in the middle. He places them on all sides and thus provides food from all sides.

**11.** "You the eastern quarter ! You are the queen; you are the ruler, extensive; O southern quarter ! You are the overlord; O western quarter! you are the self-ruler; O northern quarter ! You are the sovereign; O the great (upper) region !" These are their names. He thus lays them down even while addressing them by name. He lays them down separately and settles them separately. He chants separate *Sūdadohasa* verses over them; for those quarters are indeed separate. (First Brāhmaṇa Ends.)

## द्वितीयं ब्राह्मणम्

अथ विश्वज्योतिषमुपदधाति वायुर्वै मध्यमा विश्वज्योतिर्वायुर्ह्येवान्तरिक्षलोके विश्वं ज्योतिर्वायुमेवैतदुपदधाति तामनन्तर्हितां दिश्याभ्य उपदधाति दिक्षु तद्वायुं दधाति तस्मात्सर्वासु दिक्षु वायुः ।।१।।

यद्वेव विश्वज्योतिषमुपदधाति प्रजा वै विश्वज्योतिः प्रजाह्येव विश्वं ज्योतिः प्रजननमेवैतदुपदधाति तामनन्तर्हितां दिश्याभ्य उपदधाति दिक्षु तत्प्रजा दधाति तस्मात्सर्वासु दिक्षु प्रजाः ।।२।।

विश्वकर्मा त्वा सादयत्विति विश्वकर्मा ह्येतां तृतीयां चितिमपश्यदन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमित्यन्तरिक्षस्य ह्ययं पृष्ठे ज्योतिष्मान्वायुर्विवस्मै प्राणायापानाय व्यानायेति प्राणो वै विश्वज्योतिः सर्वस्मा उ वा एतस्मै प्राणो विश्वं ज्योतिर्येच्छेति सर्व ज्योतिर्यच्छेत्येतद्वायुष्टेऽधिपतिरिति वायुमेवास्या अधिपतिं करोति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ।।३।।

अथर्तव्या उपदधात्यृतव एते यदृतव्या ऋतूनेवैतदुपदधाति नभश्च नभस्यश्च वार्षिकावृतू इति नामनी एनयोरेते नामभ्यामेवैने एतदुपदधाति द्वे इष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतु करोत्यवकासूपदधात्यवकाभिश्च प्रच्छादयत्यापो वा अवका अपस्तदेतस्मिन्नृतौ दधाति तस्मादेतस्मिन्नृतौ भूयिष्ठं वर्षति ।।४।।

अथोत्तर इषचोर्जश्च शारदावृतू इति नामनी एनयोरेते नामयामेवैने एतदुपदधाति द्वे इष्टके भवतो द्वा हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोत्यवकासूपदधात्यापो वा

**BRĀHMAṆA II**

**1.** He then lays down the *viśvajyoti* brick. The central *viśvajyoti* (all-light) is indeed Vāyu; for, Vāyu is indeed the entire brilliance in the aerial region. So he places only Vāyu. He places it so as not to be separated from the *diśyā* bricks. So he provides Vāyu to the quarters. That is why Vāyu is (pervading) at all quarters.

**2.** Now why he places the *viśvajyoti* ? *Viśvajyoti* is indeed the creatures (people or offspring); for creatures (offspring) is all the light. He thus lays the generative power (into that world). He places them so as not to be separated from the *diśyās* and thereby places creatures in the regions and hence there are creatures in all the regions.

**3.** "May Viśvakarmā set you up" (so saying he places it); for, it was Viśvakarmā, who discovered this third layer. "On the back of the aerial region, the effulgent" — for, this effulgent Vāyu is on the back of the aerial region. "For all *prāṇa, apāna* and *vyāna*" — because the *viśvajyoti* is *prāṇa* and *prāṇa* (breath) is indeed essential for this entire universe. "Give all the illumination" (meaning) provide all light. "Vāyu is your overlord" — thereby he makes Vāyu himself his overlord. After settling it he chants *Sūdadohasa* upon it. Its significance has been told.

**4.** Then he lays down the *ṛtavyā* bricks (bricks representing the seasons). These *ṛtavyās* are the seasons and so he places only the seasons. "*Nabhas* and *nabhasyā* are the rainy season." These are the names of those two (seasonal) bricks. Thus he lays them down by their names. They are two bricks; for a season consists of two months. He settles them together and makes them into one season. He places them over *avakā* plants and covers them with *avakā* plants for, *avakā* plants are indeed water and thereby he bestows water on that season. Therefore during that season it rains profusely.

**5.** Then (he lays down the above two bricks saying) "*Iṣā* and *urja*, the two autumn seasons" — these are their names and by their names, he lays them down. They are two bricks and two months constitute that season. He settles them once and makes them into

अवका अपस्तदेतस्यर्तोः पुरस्ताद्दधाति तस्मादेतस्यर्तोः पुरस्ताद्वर्षति नोपरिष्टात्प्रच्छादयति तस्मान्न तथे[1] वोपरिष्टाद्वर्षति ।।५।।

तद्यदेता अत्रोपदधाति संवत्सर एषोऽग्निरिम उ लोका वै संवत्सरस्तस्यान्तरिक्षमेव मध्यमा चितिरन्तरिक्षमस्य वर्षाशरदावृतू तद्यदेता अत्रोपदधाति यदेवास्यै ता आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेता अत्रोपदधाति ।।६।।

यद्वेवैता अत्रोपदधाति प्रजापतिरेषोऽग्निः संवत्सर उ प्रजापतिस्तस्य मध्यमेव मध्यमा चितिर्मध्यमस्य वर्षाशरदावृतू तद्यदेता अत्रोपदधाति यदेवास्यैता आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेता अत्रोपदधाति।।७।।

ता वा एताश्चतस्र ऋतव्या मध्यमायां चिता उपदधाति द्वे -द्वे इतरासु चितिषु चतुष्पदा वै पशवोन्तरिक्षं मध्यमा चितिरन्तरिक्षे तत्पशून् दधाति तस्मादन्तरिक्षायतनाः पशवः।।८।।

यद्वेव चतस्रश्चतुष्पदा वै पशवोऽन्नं पशवो मध्यं मध्यमा चितिर्मध्यतस्तदन्नं दधाति ।।९।।

यद्वेव चतस्रश्चतुरक्षरं वा अन्तरिक्ष[2] द्वयक्षरा इतराश्चितयस्तद्यावदन्तरिक्षं तावात्तत्कृत्वोपदधाति ।।१०।।

यद्वेव चतस्रः पशुरेष यदग्निर्मध्यं तत्प्रतिपशुं वरिष्ठं करोति तस्मान्मध्यं प्रतिपग्रुर्वरिष्ठः।।११।।

१. तथैवोपरिष्टात् TE
२. अन्तरिक्षं(अवहितं) in TE only

one season. He places them on the *avakā* plants; for, *avakā* is water and thereby he provides (water) before that season. Hence it rains before this season and he does not cover them (with *avakā* plants). Hence it does not rain after that (season).

**6.** Now, why he places these (four bricks) in this (layer) is because this fire-altar is the year and the year means these worlds. Its middle layer is the aerial region and the aerial region is both rainy and autumn seasons. Hence when he places them in this (middle layer), he restores to him (the *Agni*-altar) that (middle) part of his body. That is the reason for placing them here.

**7.** And again why he places them (four bricks) here — this *Agni*-altar is of course Prajāpati and Prajāpati is none but the year and its middle part is the middle layer. The rainy and autumn seasons are its middle. Hence by placing these here (in the middle layer), he restores to him (the *Agni*-altar) that (middle) part of his body. Hence he places them here.

**8.** Thus he places these four *ṛtavyās* in the middle layer; two in each of the other layers. For, the cattle are four-footed and the aerial region is the middle layer. Thus he places the cattle in that aerial region. Hence there are animals in the aerial region and the animals have the aerial region as their above.

**9.** Again why they are four (in number) is because the cattle are quadrupeds and cattle are food. The central layer is the middle (of the altar), he places food in the middle part.

**10.** Again why they are four (bricks) — the word *antarikṣa* (meaning aerial region) is four-syllabled and the other layers have two-syllabled (names). So, as much the (syllabic units in) *antarikṣa*, making it so much, he lays down.

**11.** Again why they are four (bricks) — this *Agni*-altar is indeed, *paśu* and thus he renders the middle of the *paśu*, biggest. Hence it is that an animal is biggest towards the middle.

ता वा एताश्चतस्र ऋतव्यास्तासां विश्वज्योतिः पञ्चमी पञ्च दिश्यास्तद्दश दशाक्षरा विरालन्नं विराण्मध्यं मध्यमा चितिर्मध्यतस्तदन्नं दधाति ता अनन्तर्हिताः स्वयमातृण्णाया उपदधाति प्राणो वै स्वयमातृण्णानन्तर्हितं तत्प्राणादन्नं दधात्युत्तरा उत्तरं तत्प्राणादन्नं दधाति ।।१२।।

अथ प्राणभृत उपदधाति प्राणा वै प्राणभृतः प्राणानेवैतदुपदधाति ता दश भवन्ति दश वै प्राणाः पूर्वार्ध उपदधाति पुरस्ताद्धीमे प्राणा आयुर्मे पाहि ज्योतिर्मे यच्छेति प्राणो वै ज्योतिः प्राणं मे यच्छेत्येवैतदाह ता अनन्तर्हिता ऋतव्याभ्य उपदधाति प्राणो वै वायुर्ऋतुषु तद्वायुं प्रतिष्ठापयति ।।१३।। इति द्वितीयं ब्राह्मणम् ।।

## तृतीयं ब्राह्मणम्

अथ छन्दस्या उपदधाति पशवो वै छन्दांःस्यन्तरिक्षं मध्यमा चितिरन्तरिक्षे तत्पशून्दधाति तस्मादन्तरिक्षायतनाः पशवः ।।१।।

यद्वेव छन्दस्या उपदधाति पशवो वै छन्दांःस्यन्नं पशवो मध्यं मध्यमा चितिर्मध्यतस्तदन्नं दधाति ।।२।।

ता द्वादश-द्वादशोपदधाति द्वादशाक्षरा वै जगती पशवो वै जगत्यन्तरिक्षं मध्यमा चितिरन्तरिक्षे तत्पशून् दधाति तस्मादन्तरिक्षायतनाः पशवः ।।३।।

यद्वेव द्वादश-द्वादश द्वादशाक्षरा वै जगती पशवो वै जगत्यन्नं पशवो मध्यं मध्यमा

**12.** There are thus the four *ṛtavyas* (seasonal bricks), the *viśvajyoti* is the fifth and there are five *diśyās* (regional bricks) — they amount to ten. The Virāj metre has ten syllables and Virāj means food. The central layer is the middle part. So he places in the middle of the body. They are placed so, that they are not separated from the naturally perforated brick. The *svayamātṛṇṇā* is indeed *prāṇa*. So he places food also as not to be separated from *prāṇa*. Just over (the central brick) he lays them down and thereby just over the *prāṇa* he places food.

**13.** Then he lays down the *prāṇabhṛt* bricks. The *prāṇabhṛts* are indeed vital airs. So he places only the *prāṇas*. They are ten; for, there are ten *prāṇas*. He lays them in the front, for, these *prāṇas* are on the front side. "Safeguard my life-span, bestow brilliance on me" (he says while placing them). For, *prāṇa* is indeed brilliance and he thereby means 'supply me with *prāṇa*.' He places them in such a way that they are not separated from the *ṛtavyās*. Because *prāṇa* means Vāyu and he establishes Vāyu in those seasons. (Second Brāhmaṇa Ends.)

## BRĀHMAṆA III

**1.** Then he lays down the *chandasyās* (bricks of the metres). The metres are indeed the cattle and the middle layer is the aerial region. Thus he places these cattle in the aerial region. So the cattle have the aerial region for their abode.

**2.** Why he lays down the *chandasyās* — the metres are indeed cattle and cattle are food. The middle layer is the middle part (of the *Agni*-altar). Thereby he places that food in the middle part.

**3.** They (*chandasyās*) are twelve in number — for, the Jagatī metre consists of twelve syllables. The cattle belong to Jagatī and the middle layer is the aerial region. Thus he places cattle in the aerial region for their abode.

**4.** Why they are by (sets of) twelve — the Jagatī has twelve syllables and the cattle are of the Jagatī metre. The cattle means food.

चितिर्मध्यतस्तदन्नं दधाति ता अनन्तर्हिताः प्राणभृद्भ्य उपदधा[1]त्यनन्तर्हितं तत्प्राणेभ्योऽन्नं दधात्युत्तरा उत्तरं तत्प्राणेभ्योऽन्नं दधाति ।।४।।

मा छन्द इत्ययं वै लोको मायः हि लोको मितइव प्रमा छन्द इत्यन्तरिक्षलोको वै प्रमान्तरिक्षलोको ह्यस्माल्लोकात्प्रमित इव प्रतिमा छन्द इत्यसौ वै लोकः प्रतिमैष ह्यन्तरिक्षलोके प्रतिमित इवास्त्रीवयश्छन्द इत्यन्नमस्त्रीवयस्तद्यदेषु लोकेष्वन्नं तदस्त्रीवयोऽथो यदेभ्यो लोकेयोऽन्नꣳ स्रवति तदस्त्रीवयोऽथातो निरुक्तान्येव छन्दाꣳस्युपदधाति ।।५।।

पङ्क्तिश्छन्द उष्णिक्छन्दो बृहतीछन्दोऽनुष्टुप्छन्दो विराट् छन्दो गायत्री छन्दस्त्रिष्टुप् छन्दो जगती छन्द इत्येतानि निरुक्तानि विरालष्टमानि छन्दाꣳस्युपदधाति पृथिवी छन्दोऽन्तरिक्षं छन्द इति यान्येतद्देवत्यानि छन्दाꣳसि तान्येवैतदुपदधात्यग्निर्देवता वातो देवतेत्येता वै देवताश्छन्दाꣳसि तान्येवैतदुपदधाति ।।६।।

स वै निरुक्तानि चानिरुक्तानि चोपदधाति स यत्सर्वाणि निरुक्तान्युपाधास्यदन्तवद्धान्नमभविष्य दक्षेष्यत हाऽथ यत्सर्वाण्यनिरुक्तानि परोक्षꣳ हान्नमभविष्यन्न हैनदद्रक्ष्यꣳश्च न निरुक्तानि चानिरुक्तानि चोपदधाति तस्मान्निरुक्तमन्नमद्यमानं न क्षीयते ।।७।।

तानि वा एतानि त्रीणि द्वादग्रान्युपदधाति तत्षट्त्रिꣳशत्षट्त्रिꣳग्रदक्षरा बृहत्येषा वै सा बृहती यां तद्देवा अन्तरिक्षं बृहतीं तृतीयां चितिमपश्यꣳस्तस्या एतस्यै देवा उत्तमाः ।।८।।

१. उपदधत्यनन्तर्हितं

The middle layer is the middle part (of the *Agni*-altar). Thus he places food in that middle part. They are placed in such a way as not separated from the *prāṇabhṛt* bricks. For, food is not separated from *prāṇa* (vital air). Thus he provides food for the *prāṇas.* So he places them over it and thus bestows food on the *prāṇas.*

**5.** (He lays them down saying) "The metre is measure"—measure (*mā*) is indeed this terrestrial world; for, this world is as it were measured (*mita*). "The metre is *pramā;*" for, *pramā* is indeed, the aerial region; for the aerial region is measured (*pramita*) by this terrestrial world. "The metre is Pratimā;" for, *pratimā* is indeed the yonder world (sky); for it is, as it were, a prototype of the aerial region (or copy of the aerial region). "The metre is Asrīvayas;" food is Asrīvayas. What food is there in these worlds is Asrīvayas. So what food flows from these worlds that is Asrīvayaḥ. Hence forth he lays down only the defined metres.

**6.** The Paṅkti metre, the Uṣṇik metre, the Bṛhatī, the Anuṣṭubh, the Virāḍ, the Gāyatrī, the Triṣṭubh and the Jagatī metre–these are the defined metres, eight in number, including the Virāḍ, he lays down. "The metre earth, the metre aerial region etc.," — these are the metres belonging to the respective deities,which he now lays down. "Agni, the god; Vāyu, the god etc." these gods are, ındeed, metres and them he lays down.

**7.** He lays down both the defined (*chandasyā* bricks) as well as the undefined. If he were to place (only) all defined ones there will be a breakdown. If he were to place all undefined ones, then the food would be rendered invisible and one would not see it at all. He lays down both defined and undefined ones and consequently, the food that is definite (surely available)and is eaten, does not get exhausted.

**8.** These are three sets of those twelve, he lays down. That amounts to thirty-six and the Bṛhatī metre has thirty-six syllables. This is that Bṛhatī, the aerial region, which gods then discovered as a third layer. In that set of Bṛhatī bricks (that is) of gods are the fore-most.

यद्वेवैता इष्टका उपदधाति प्रजापतेर्विस्रस्तात्सर्वाणि भूतानि सर्वा दिशोऽनु व्युदक्रामन्स यः स प्रजापतिर्व्यस्रꣳ सतायमेव स योऽयमग्निश्चीयतेऽथ यान्यस्मात्तानि भूतानि व्युदक्रामन्नेतास्ता इष्टकास्तद्यदेता उपदधाति यान्येवास्मात्तानि भूतानि व्युदक्रामꣳस्तान्यस्मिन्नेतत्प्रतिदधाति ।।९।।

तद्या दश प्रथमा उपदधाति स चन्द्रमास्ता दश भवन्ति दशाक्षरा विराळन्नं विराळामु चन्द्रमा अथ या उत्तराः षट्त्रिꣳग्रदर्धमासाश्च ते मासाश्च चतुर्विꣳग्रशतिरर्धमासा द्वादशमासाश्चन्द्रमा वै संवत्सरः सर्वाणि भूतानि तं यत्र देवाः समस्कुर्वꣳस्तदस्मिन्नेतानि सर्वाणि भूतानि मध्यतोऽदधुस्तथैवास्मिन्नयमेत द्दधाति ता अनन्तर्हिता ऋतव्याभ्य उपदधात्यृतुषु तत्सर्वाणि भूतानि प्रतिष्ठापयति ।।१०।। इति तृतीयं ब्राह्मणम् ।।

## चतुर्थं ब्राह्मणम्

अथ वालखिल्या उपदधाति प्राणा वै वालखिल्याः प्राणानेवैतदुपदधाति ता यद्वालखिल्या नाम यद्वा उर्वरयोरसंभिन्नं भवति खिल इति वै तदाचक्षते वालमात्रादु हेमे प्राणा असंभिन्नास्ते यद्वालमात्रादसंभिन्नास्तस्माद्वालखिल्याः ।।१।।

स वै सप्त पुरस्तादुपदधाति सप्त पश्चात्तद्याः सप्त पुरस्तादुपदधाति य एवेमे सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधात्यथ याः सप्त पश्चादेषामे वैतत्प्राणानामेतान्प्राणान्प्रतीन्करोति तस्माद्यदेभिरन्नमत्ति तदेतैरत्येति ।।२।।

**9.** As to why he lays down these bricks — when Prajāpati became exhausted, all living beings departed from him in all directions. That Prajāpati who got exhausted is the same as this *Agni*-altar which is being built up. Those living beings which departed from him at that time, are the same as these bricks. By placing these bricks, he restores to him those very living beings, which then went away from him.

**10.** The first ten bricks (*prāṇabhṛts*) which he lays down are the moon. They are ten for, Virāḍ has ten syllables. Virāḍ is food and the moon is indeed food. Those thirty-six (*chandasyās*) which he lays down subsequently are the half months and the months; i.e. twenty-four half months and twelve months. The moon is of course, the year and all the living beings. When gods replenished him (Prajāpati) they put all the living beings inside him. In the same way, this own (Yajamāna) puts them therein (*Agni*-altar which is Prajāpati). They lay them down in such a manner that they are not separated from the *ṛtavyās* (seasonal bricks). Thus he establishes all the living beings in the seasons. (Third Brāhmaṇa Ends.)

### BRĀHMAṆA IV

**1.** Then he places the *vālakhilyā* bricks. The *vālakhilyās* are indeed the vital airs. Thus he endows him with vital airs. Why they are named *vālakhilyās* — uncultivated space between two furrowed land-pieces is called *khila*. These *prāṇas* (channels of breaths) are separated from each other only by the breadth of a horse's hair. Since they are separated only by the breadth of a horse's hair, they are called *vālakhilyās*.

**2.** He places seven of them in the front and seven in the back. Those seven which he places in the front are, no doubt, those *prāṇas* (vital air passages) in the front. They are now placed in it. By those seven which he places in the back, he provides counter-breathings to those (frontal) breathings. Hence when he eats food, that food is over-run by these counter-breathings.

यद्वेव सप्त पुरस्तादुपदधाति सप्त वा इमे पुरस्तात्प्राणाच्चत्वारि दोर्बाहवाणि शिरो ग्रीवा यदूर्ध्वं नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राण एते वै सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधात्यथ याः सप्त पश्चात्सप्त वा इमे पश्चात्प्राणाश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्ना-भेस्तत्सप्तममङ्गेऽङ्गे हि प्राण एते वै सप्त पश्चात्प्राणास्तानस्मिन्नेतद्दधाति मूर्धासि राट् ध्रुवासि धरुणा धर्त्र्यसि धरणी यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्रीत्येतानेवास्मिन्ने-तद्ध्रुवान्प्राणान्येछति ।।३।।

यद्वेव वालखिल्या उपदधात्येतद्वै देवा वालखिल्याभिरे वेमाँ ल्लोकान्सम-युरितश्चोर्ध्वानमुतश्चार्वाचस्त थैव तद्यजमानो वालखिल्याभिरेवेमाँल्लो-कान्संयातीतश्चोर्ध्वानमुतश्चार्वाचो मूर्धासि रालितीमं लोकमरोहन् ध्रुवासि धरुणेत्यन्तरिक्षलोकं धर्त्र्यसि धरणीत्यमुँल्लोकमायुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वेति चत्वारश्चतुष्पादाः पशवोऽन्नं पशवस्त एतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनामुष्मिँल्लोके प्रत्यतिष्ठꣳस्तथैवैतद्यजमान एतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनामुष्मिँल्लोके प्रतितिष्ठति ।।४।।

स स पराडिव रोह इयमु वै प्रतिष्ठा ते देवा इमां प्रतिष्ठामभि प्रत्यायꣳस्तथैवैतद्यजमान इमां प्रतिष्ठामभिप्रत्यैति यन्त्री रालित्यमुं लोकमरोहन् यन्त्र्यसि यमनीत्यन्तरिक्षलोकं ध्रुवासि धरित्रीतीमं लोकमिषे त्वोर्जे त्वा रय्यै त्वा पोषायत्वेति चत्वारश्चतुष्पादाः पशवोऽन्नं

**3.** Why he places seven in front is because these channels of vital air are seven in the front part of the body; the four upper and lower parts of the fore-arms, the head, the neck and that portion which is above the navel being the seventh; for, in each limb there is a vital air. Thus it makes to seven *prāṇas* in the front. Them, he puts into him (Prajāpati) — (*Agni*-altar). Now the seven that he places at the back are indeed seven vital airs in the back; the four thighs and knee-bones, the two feet and that part below the navel forms the seventh; for, in each limb there is a vital air. Thus it makes up seven *prāṇas* at the back; them, he now places into him (Prajāpati). "You are the head, the king; you are firm; you are the one who sustains, the *dharaṇī* (holder), you are the leader, a ruler; you are the one who guides, a guide; you are steady and the *dharaṇī* (holder)" — thus he bestows steady vital airs upon him.

**4.** And why he places the *vālakhilyas* is because it is with the help of *vālakhilyas*, that the gods get to these worlds; both from here upwards and from above downwards. In like manner, this Yajamāna wants to travel from here upwards and from yonder downwards with the help of the *vālakhilyas*. "You are the head, the ruler" — so saying they got on this terrestrial world. "You are firm and unmoving" — so saying ascended to the aerial region. "You are the sustainer and holder" — so saying the yonder world (I place) you for longevity of life; you for vitality; you for agriculture; you for well-being." There are four types of quadrupeds and animals are food. Thus with these four types of quadrupeds, food, they (gods) got themselves established in the yonder world. In the same way, this Yajamāna gets himself established in the yonder world by means of these four types of quadrupeds, food.

**5.** This is as it were an ascent from here (the earth) but this earth is a base and gods did return to this earth, the base. "You are the leader, the king" — so saying they descended to that yonder world. "You are the one who guides; a guide" — so saying they came back to the aerial region. "You are steady and *dharaṇī*(holder) – so saying they returned to this terrestrial world. "You for longevity of life, you for vitality; you for agriculture, you for well-being" — they are four types of quadrupeds (animals). The animals are food and thus by means of

पशवस्त एतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनास्मिꣳल्लोके प्रत्यतिष्ठँस्तथैवैतद्यजमान एतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनास्मिँल्लोके प्रतितिष्ठति ।।५।।

अथातः सꣳस्कृतिरेव या अमूरेकादशेष्टका उपदधाति योऽसौ प्रथमोऽनुवाकस्तदन्तरिक्षꣳ स आत्मा तद्यत्ता एकादश भवन्त्येकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभमन्तरिक्षमथ या उत्तराः षष्टिः स वायुः स प्रजापतिः सोऽग्निः स यजमानः ।।६।।

तद्या : पुरस्तादुपदधाति शिरोऽस्य तास्ता दश भवन्ति दश वै प्राणाः प्राणा उ वै शिरः पूर्वार्ध उपदधाति पुरस्ताद्धीदꣳ शिरः ।।७।।

अथ या दक्षिणतो यदूर्ध्वं मध्यादवा[1]चीनꣳ शीर्ष्णस्तदस्य ता अथ याः पश्चाद्यदूर्ध्वं प्रतिष्ठाया अवा[2] चीनंमध्यात्तदस्य ताः प्रतिष्ठैवोत्तरतः ।।८।।

तद्याः सप्त पुरस्ताद्वालखिल्या उपदधाति य एवेमे सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति ता अनन्तर्हिता एताभ्यो दशभ्य उपदधात्यनन्तर्हितांस्तच्छीर्ष्णः प्राणान्दधात्यथ याः सप्त पश्चाद्य एवेमे सप्त पश्चात्प्राणास्ता नस्मिन्नेतद्दधाति ता अनन्तर्हिता एताभ्यो द्वादशभ्य उपदधात्यनन्तर्हिताꣳस्तदात्मनः प्राणान् दधाति स एष वायुः प्रजापतिरस्मिꣳस्त्रैष्टुभेऽन्तरिक्षे समन्तं पर्यक्णस्तद्यत्ततीयां चितिमुपदधाति वायुं चैन तदन्तरिक्षं च सꣳस्कृत्योपधत्तेऽथ लोकंपृणे उपदधात्यस्याꣳ स्रक्त्यां तयोरुपरि बन्धुः पुरीषं निवपति तस्योपरि बन्धुः ।।९।। इति चतुर्थं ब्राह्मणम् ।।

## ।। इति तृतीयोऽध्यायः ।।

१. अर्वाचीनꣳ My
२. अर्वाचीनं My

these four type of animals, food, they — (gods) came back to this terrestrial world. In the same manner this Yajamāna, by these four types of animals, food, returns to this world.

**6.** Now as to the replenishing of Prajāpati—these eleven bricks which he lays down (one *svayamātṛṇṇā*, four *diśyās*, one *viśvajyoti* and four *ṛtavyās*) constitute the first *Anuvāka* (the first set of *Yajus* formulas uttered for the third *citi*) and the aerial region and this body (of the *Agni*-altar). Why they happen to be eleven is because Triṣṭubh is of eleven syllables and the aerial region belongs to the Triṣṭubh metre. Then the sixty bricks placed subsequently (represent) Vāyu; he is the Prajāpati, he is the *Agni*-altar and he is the Yajamāna.

**7.** Those which he places in front on his head, they are ten in number; for,the *prāṇas* are ten. The head is the (channel of) *prāṇas*. They are placed in the front half because this head is in the front.

**8.** Those which he places on the right side represent that part of his body which is above the middle and below the head. That which he places at the back represents that part which is above the feet and below the middle part. Those on the left are his feet themselves.

**9.** The seven *vālakhilyas* which he places in the front are the same as these seven *prāṇas* which are in the front part (of an animal). Those he puts into him are placed in such a way that they are not separated from those ten *prāṇabhṛt* bricks. Thus he ensures that *prāṇas* are not separated from the head. The seven (*vālakhilyas*) he places at the back, he puts those seven *prāṇas* behind. They are placed in such a way that they are not separated from those twelve *chandasyā* bricks. Thus he ensures that the vital airs are not separated from the body. This Vāyu-Prajāpati is turned all around in this aerial region which is of Triṣṭubh. So when he builds up the third layer, he does so after having joined Vāyu and the aerial region. Then he places two *lokaṁpṛṇā* (space-filling) bricks in this (north-west) corner. The significance of this will be told later. Thereon he puts loose soil. Its purpose will be told later. (Fourth Brāhmaṇa Ends.)

**(Chapter Three Ends.)**

